॥ कूर्मस्तोत्रं ॥

**देवा ऊचुः**

नमाम ते देव पदारविंदं
प्रपन्नतापोपशमातपत्रं ।
यन्मूलकेता यतयोऽंजसोरु
संसारदुःखं बहिरुत्क्षिपंति ॥ १ ॥

धातर्यदस्मिंभव ईश जीवाः
तापत्रयेणाभिहता न शर्म ।
आत्मंलभंते भगवंस्तवांघ्रि
छायां सविद्यामत आश्रयेम ॥ २ ॥

मार्गंति यत्ते मुखपद्मनीडैः
छंदःसुपर्णैरृषयो विविक्ते ।
यस्याघमर्षोदसरिद्वरायाः
पदं पदं तीर्थपदः प्रपन्नाः ॥ ३ ॥

यच्छ्रद्धया श्रुतवत्या च भक्त्या
सम्मृज्यमाने हृदयेऽवधाय ।
ज्ञानेन वैराग्यबलेन धीरा
व्रजेम तत्तेऽंघ्रिसरोजपीठं ॥ ४ ॥

विश्वस्य जन्मस्थितिसम्यमार्थे
कृतावतारस्य पदांबुजं ते ।
व्रजेम सर्वे शरणं यदीश
स्मृतं प्रयच्छत्यभयं स्वपुंसां ॥ ५ ॥

यत्सानुबंधेऽसति देहगेहे
ममाहमित्यूढदुराग्रहाणां ।
पुंसां सुदूरं वसतोऽपि पुर्यां
भजेम तत्ते भगवन् पदाब्जं ॥ ६ ॥

तान् वै ह्यसद्वृत्तिभिरक्षिभिर्ये
पराहृतांतर्मनसः परेश ।
अथो न पश्यंत्युरुगाय नूनं
ये ते पदन्यासविलासलक्ष्म्याः ॥ ७ ॥

पानेन ते देव कथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथांजसान्वीयुरकुंठधिष्ण्यं ॥ ८ ॥

तथापरे चात्मसमाधियोग
बलेन जित्वा प्रकृतिं बलिष्ठां ।
त्वामेव धीराः पुरुषं विशंति
तेषां श्रमः स्यान्न तु सेवया ते ॥ ९ ॥

तत्ते वयं लोकसिसृक्षयाद्य
त्वयानुसृष्टास्त्रिभिरात्मभिः स्म ।
सर्वे वियुक्ताः स्वविहारतंत्रं
न शक्नुमस्तत्प्रतिहर्तवे ते ॥ १० ॥

यावद्बलिं तेऽज हराम काले
यथा वयं चान्नमदाम यत्र ।
यथोभयेषां त इमे हि लोका
बलिं हरंतोऽन्नमदंत्यनूहाः ॥ ११ ॥

त्वं नः सुराणामसि सान्वयानां
कूटस्थ आद्यः पुरुषः पुराणः ।
त्वं देव शक्त्यां गुणकर्मयोनौ
रेतस्त्वजायां कविमादधेऽजः ॥ १२ ॥

ततो वयं मत्प्रमुखा यदर्थे
बभूविमात्मन्करवाम किं ते ।
त्वं नः स्वचक्षुः परिदेहि शक्त्या
देव क्रियार्थे यदनुग्रहाणां ॥ १३ ॥

॥ इति श्रीमद्भागवते महापुराणे तृतीयेस्कंधे पंचमेऽध्याये देवैर्कृत कूर्मस्तोत्रं संपूर्णं ॥